यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत् ॥ इति ।

एवं सति मौनादीनां वागादिदमनहेतुत्वाद्यथा दण्डत्वं तथैवाज्ञानतत्कार्यदमनहेतोर्ज्ञानस्य दण्डत्वम् । अयं ज्ञानदण्डो येन परमहंसेन धृतः स एव मुख्य एकदण्डीत्युच्यते । मानसस्य ज्ञानदण्डस्य कदाचिच्चित्तविक्षेपेण विस्मृतिः प्रसज्येतेति तन्निवारणार्थं स्मारकः काष्ठदण्डो ध्रियते । तदेतच्छास्त्रार्थरहस्यमबुद्ध्वा वेणुमात्रेण पुरुषार्थसिद्धिमभिप्रेत्य काष्ठदण्डो येन परमहंसेन धृतः स पुरुषो बहुविधयातनोपेतत्वाद्घोरान्महारौरवसंज्ञकान्नरकानाप्नोति । तत्र हेतुरुच्यते—परमहंसवेषं दृष्ट्वा ज्ञानित्वभ्रान्त्या सर्वे जनाः स्वस्वगृहे तं भोजयन्ति । अयं च जिह्वालम्पटो वर्ज्यावर्ज्यविवेकमकृत्वा सर्वमश्नाति तेन प्रत्यवायं प्राप्नोति । यानि तु 'नान्नदोषेण मस्करी' 'चातुर्वर्ण्यं चरेद्भैक्षम्' इत्यादीनि वाक्यानि तानि ज्ञानिविषयाणि । अयं च ज्ञानवर्जित इति युक्तोऽस्य नरकः । अत एव ज्ञानहीनस्य यतेर्भिक्षानियममाह मनुः—

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
एककालं चरेद्भैक्षं न प्रसज्येत[3] विस्तरम् ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ इति ।

ज्ञानाभ्यासिनं प्रति त्वेवं स्मर्यते—

एकवारं द्विवारं वा भुञ्जीत परहंसकः ।
येन केन प्रकारेण ज्ञानाभ्यासी भवेत्सदा ॥ इति ।

एवं सति ज्ञानदण्डकाष्ठदण्डयोर्यत्तारतम्यमुत्तमाधमत्वरूपं तदिदमवगत्योत्तमं ज्ञानदण्डं यो धारयति स एव मुख्यः परमहंस इत्यवगन्तव्यम् । नन्वमुष्य परमहंसस्यास्तु ज्ञानदण्डो मा भूत्काष्ठदण्डनिर्बन्ध इतरा तु चर्या कीदृशीत्याशङ्क्याऽऽह—'आशाम्बरो निर्नमस्कारो न स्वधाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेद्भिक्षुर्नाऽऽवाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं च न लक्ष्यं नालक्ष्यं न पृथङ्नापृथङ्न चाहं न त्वं न च सर्वं न चानिकेतस्थितिरेव स भिक्षुः सौवर्णादीन्नैव परिग्रहेन्न लोकं नावलोकं च' इति ।

१ क. ख. ग. घ. ङ. च. वेषमा° । २ क. ग. घ. ङ. °घसंतापोपे° । ३ क. ख. ग. घ. ङ. च. °सज्जेत विस्तरे । भै° । ४ क. ख. ग. घ. ङ. च. °दीनां नैव ।

उक्तश्रुतितात्पर्यमाह—**परमहंसस्ये**त्यादिना । तत्र दृष्टान्तं स्पष्टयति—**यथे**त्यादिना । तत्र मानमाह—**वाग्दण्डादय** इत्यादिना । सावतरणम् । सर्वभूतेष्विति विषयसप्तमी । एवं च सर्वभूतविषयकं वाग्दण्डादित्रयं निक्षिप्य त्यक्त्वा 'अहिंसा परमो धर्मः' इति वचनात्कायिकादिहिंसात्रयमपि परिवर्ज्येत्यर्थः । नियच्छति संपादयतीति यावत् । स्मृत्यन्तरमप्याह—**तेषामि**त्यादिना । फलितमाह—**एवं सती**त्यादिना । नन्वेवं दिगम्बरः परमहंसः प्राचीनाचार्येषु कोऽपि न प्रसिद्ध इत्यत आह—**मानसस्थे**त्यादिना । **न चोत्पातेति** । उत्पातो भूकम्पविद्युत्पातादिः । निमित्तं क्षुदादि तत्फलकथनाभ्यामित्यर्थः । **न नक्षत्रेति** । नक्षत्रविद्या, ज्योतिःशास्त्रं तदादिर्याऽङ्गविद्या शिक्षादिषडङ्गविद्या तयेत्यर्थः । नानुशासनेति । अध्यापनपाण्डित्याभ्याम् । अपरं तु सरलमेवाखिलम् ।

उक्तश्रुतिं व्याकरोति, **आशा** इत्यादिना—

**आशा दिशस्ता एवाम्बरं वस्त्रमाच्छादनं यस्यासावाशाम्बरः । यत्तु स्मृतिवचनम्—**

**जान्वोरूर्ध्वमधो नाभेः परिधायैकमम्बरम् ।**
**द्वितीयमुत्तरं वासः परिधाय गृहानटेत् ॥ इति ।**

**तदिदमयोगिविषयम् । अत एव पूर्वं तच्च न मुख्योऽस्तीत्युक्तम् । यत्तु स्मृत्यन्तरम्—**

**यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।**
**तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ॥ इति ।**

**तस्याप्यन्यविषयत्वान्नास्य नमस्कारः कर्तव्योऽस्ति । अत एव ब्राह्मणलक्षणे 'निर्नमस्कारमस्तुतिम्' इत्याद्युदाहृतम् । गयाप्रयागादितीर्थेषु श्रद्धाजाड्यात्प्राप्तः स्वधाकारो निषिध्यते । पूर्वत्र निन्दागर्वेत्यादिवाक्ये परैः कृतया स्वात्मनिन्दया क्लेशो निवारितः, अत्र तु स्वकर्तृके परविषये निन्दास्तुती निषिध्येते । यादृच्छिकत्वं निर्बन्धराहित्यम् । न क्वचिदपि व्यवहारे निर्बन्धं कुर्यात् । यस्तु देवपूजायां निर्बन्धः स्मर्यते—**

**भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम् ।**
**कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् ॥ इति ।**

---

१ छ. °यमौत्त° । २ क. ख. ङ. च. °प्ययोगिवि° ।

तस्याप्ययोगिविषयत्वमित्यभिप्रेत्य नाऽऽवाहनमित्याद्याम्नातम्। सकृत्स्मरणं ध्यानं, नैरन्तर्येणानुस्मरणमुपासनमिति तयोर्भेदः। यथा योगिनः स्तुतिनिन्दादिलौकिकव्यवहाराभावः, यथा च देवपूजादिधर्मशास्त्रव्यवहाराभावः, तथा लक्ष्यत्वालक्ष्यत्वादिज्ञानशास्त्रव्यवहारोऽपि नास्ति। यत्साक्षिचैतन्यमस्ति तदिदं तत्त्वमसीति वाक्ये त्वंपदेन लक्ष्यम्। देहादिविशिष्टं चैतन्यं लक्ष्यं न भवति किं तु वाच्यम्। तच्च वाच्यं तत्पदार्थात्पृथक्। तल्लक्ष्यं त्वपृथक्। स्वदेहनिष्ठो वाच्योऽर्थोऽहमिति व्यवहारार्हः। परदेहनिष्ठस्त्वमिति व्यवहारार्हः। लक्ष्यं वाच्यमित्युभयविधं चेतनोपेतमन्यज्जडं जगत्सर्वमिति व्यवहारार्हमित्येतादृशो विकल्पो न कोऽपि योगिनोऽस्ति, तदीयचित्तस्य ब्रह्मणि विश्रान्तत्वात्। अत एव स भिक्षुरनिकेतस्थितिरेव। यदि नियतनिवासार्थं कंचिन्मठं संपादयेत्तदानीं तस्मिन्ममत्वे सति तदीयहानिवृद्ध्योश्चित्तं विक्षिप्येत। एतत्सर्वमभिप्रेत्य गौडपादाचार्या आहुः—

निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्॥ इति।

यथा मठो न परिग्रहीतव्यस्तथा सुवर्णरजतादीनां भिक्षाचमनपात्राणामेकमपि न गृह्णीयात्। तदाह यमः—

हिरण्मयानि पात्राणि कार्ष्णायसमयानि च।
यतीनां तान्यपात्राणि[1] वर्जयेत्तानि भिक्षुकः। इति।

मनुरपि—अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च।
तेषामद्भिः[2] स्मृतं शौचं चमसानामिवाध्वरे॥
अलाबुदारुपात्रं वा मृन्मयं वैणवं तथा।
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत्॥ इति।

बौधायनोऽपि—स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः।
भुञ्जीत न वटाश्वत्थकरञ्जानां च पर्णके॥
आपद्यपि न कांस्येषु मलाशी कांस्यभोजनः।
सौवर्णे राजते ताम्रे मृन्मये त्रपुसीसयोः॥ इति।

१ क. ख. ग. घ. ङ. च. °नां नान्य°। २ क. ख. ग. घ. छ. च. °तेषां शुद्धिः।

तथा लोकं जनं शिष्यवर्गं न गृह्णीयात् ।

तत्राह मनुः—एक एव चरेन्नित्यं सिध्द्यर्थमसहायकः ।

सिद्धिमेकस्य संपश्यन्न जहाति न हीयते । इति ।

निरुक्तयोगिव्यवहारे स्मृतिविरोधमाशङ्क्य तस्यामुख्यपरमहंसपरत्वेन समाधाने कृतेऽपि तद्दार्ढ्यार्थं सांप्रदायिकसंमतिमपि तत्राऽऽह—एतत्सर्वमित्यादि ।

उक्तेषु यतिधर्मेषु मेधातिथेः प्रकारान्तरेणापि संमतांस्तद्धर्मान्संगृह्णाति—मेधातिथिरपीत्यादिना—

मेधातिथिरपि—

आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः ।
दिवा स्वापो वृथाऽऽलापो यतेर्बन्धकराणि षट् ॥
एकाहात्परतो ग्रामे पञ्चाहात्परतः पुरे ।
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ॥
उक्तालाब्वादिपात्राणामेकस्यापि न संग्रहः ।
भिक्षोर्भैक्षभुजश्चापि पात्रलोपः स उच्यते ॥
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ।
कालान्तरोपभोगार्थं संचयः परिकीर्तितः ॥
शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः ।
शिष्याणां न तु कारुण्यात्स ज्ञेयः शिष्यसंग्रहः ॥
विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ।
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ॥
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ।
अनुग्रहः पथि प्रश्नो वृथाऽऽलापः स उच्यते ॥ इति ।

लोकं शिष्यजनरूपं न गृह्णीयादित्येतावदेव न भवति किं तु तस्य लोकस्यावलोकं दर्शनमपि न कुर्यात्तस्य बन्धहेतुत्वात् । न चेत्यनेनान्यदपि स्मृतिनिषिद्धं न कुर्यादित्यभिप्रेतम् । तच्च निषिद्धं मेधातिथिर्दर्शयति—

स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥

---

१ क. ख. ग. घ. छ. च. °लोपश्च । २ क. फ. ग. छ. °लोपः स । ३ क. क. ग. छ. च. °ग्रहात्पथि ।

